णितंस्कंधयुग्मेचलक्ष्मीरेकंकंठेविभूतिर्मदनपरिमितंवक्षसिप्रीतिलाभः ॥ षड्भिः पीडांघ्रियुग्मेजलधिपरिमितं वामबाहौचमृत्युर्दृग्युग्मेत्रीणिदद्युर्नृपतिसमसुखंवाक्पतेश्चक्रमेतत् ॥ १३ ॥ इतिगुरुडिंभचक्रम् ॥ ५ ॥ मौलौपंचद्वयंचक्रे चतुष्कंहृदयेस्वभात् ॥ सप्तबाहौत्रयंगुह्ये द्वेजान्वोर्जलधिः पदे ॥ १४ ॥ सुखंहृदितथामौलौ गुह्यभेमरणंध्रुवम् ॥ मुखेसुभोजनंबाहौ मृत्युर्जानुपदोर्व्यथा ॥ ॥१५॥ इतिशुक्रडिंभचक्रम् ॥६॥ यस्मिञ्शनिश्चरतिवक्रगतेतदृक्षंचत्वारिदक्षिणकरांघ्रियुगेभषट्कं ॥ चत्वारिवामकरगान्युदरेचपंच मूर्ध्नित्रयंनयनयोर्द्वितयंगुदे[1]च॥१६॥ मुखस्थितेभानुसुतेतिपीडा लक्ष्मीर्यशोदक्षिणहस्तसंस्थे ॥ पादद्वयेनिष्फलताचवामे करेचयुद्धेतनुसंशयश्च ॥ १७ ॥ हृद्यर्थोमस्तकेराज्यं नेत्रयोःपरमंसुखं॥ गुदेचप्राणसंदेहः शनिचक्रेविनिर्दिशेत् ॥ १८ ॥ मुखाच्चरतिगुह्येच गुह्यादायातिमस्तके ॥ मस्तकाल्लोचनेयातिलोचनाद्धृदयंव्रजेत् ॥ १९ ॥ हृदयाद्वामहस्तंच वामहस्तात्पदद्वयम् ॥ पादाच्चदक्षिणंहस्तं शनिचारोयमुच्यते

१ गुदैकमितिपाठे सप्तविंशतिनक्षत्रसंख्या न भवतीति गुदेचेति गुदेपि द्वयमित्यर्थः ।

॥ २० ॥ इतिशनिडिंभचक्रम् ॥ यस्मिन्नृक्षेभवेद्राहुस्त दादौसप्तपादयोः ॥ दक्षिणेचकरेपंच शिरसित्रीणिदापये त् ॥ २१ ॥ नक्षत्रेद्वेहृदिन्यस्य मुखेचैकंनियोजयेत् ॥ पंचवामकरेदद्यान्नाभौचैकंनियोजयेत् ॥ २२ ॥ गुह्यदे शेत्रयंदद्याद्राहुचक्रमिदंस्मृतम् ॥ २३ ॥ पादयोर्द्धनहा निःस्यात्संतापोदक्षिणेकरे ॥ मस्तकेचभयंशत्रोर्हृदये दुर्जनप्रियः ॥ २४ ॥ मुखेदुर्जनसंहारो मृत्युर्वामकरेभवे त् ॥ नाभिगंसर्वनाशाय गुह्येप्राणविनाशनम् ॥ २५ ॥ इतिराहुपुरुषाकृतिचक्रम् ॥ ८ ॥ यस्मिन्नृक्षेभवेत्केतु स्तदादौतुफलंवदेत् ॥ नेत्रेद्वेरोगशोकाय मुखेलाभायपं चच ॥ २६ ॥ राज्यप्रदंत्रयंमौलौ नक्षत्रंपरिकीर्तितम् ॥ चतुष्कंदक्षिणेहस्ते नक्षत्रंचयशःप्रदम् ॥२७॥ वामहस्ते चतुष्कंच भयरोगकरंसदा ॥ एकंनाभौचनाशाय गुह्येद्वे मृत्युकारके ॥२८॥ ऋक्षाणिपादयोःषट्कं धननाशकरा णिवै ॥ केतुचक्रस्यमाहात्म्यं देहस्थंज्ञायतेबुधैः ॥२९॥ इतिकेतुडिंभचक्रम् ॥ ९ ॥ मौलौत्रयंमुखेसप्त स्तनयोर ष्टभानिच॥हृदित्रयंत्रयंनाभौ त्रयंगुह्येचविन्यसेत्॥३०॥ मौलौसंतापकृत्सूर्यो मुखेमिष्टान्नदोभवेत् ॥स्तनयोःकाम

दःप्रोक्तो हृदयेसुखदःस्त्रियः ॥ ३१ ॥ नाभौपतिसुखंदत्ते गुह्येकामकरःसदा ॥ सूर्यांडिभाख्यचक्रंतुस्त्रीणांप्रोक्तंविशेषतः ॥ ३२ ॥ इतिस्त्रीणांसूर्यपुरुषाकृतिचक्रम् ॥ १ ॥ ऊर्द्ध्वास्तिस्रस्त्रिशूलाग्रा रेखास्तिस्रस्तिरःस्थिताः ॥ द्वेद्वे रेखेकोणयोश्च शृंगयुग्मंतथैकया ॥ ३३ ॥ मध्यत्रिशूलदंडाधो भानुनक्षत्रमालिखेत् ॥ अन्यान्यभिजितासार्द्धं विलिखेद्दंडमस्तके ॥ ३४ ॥ अधस्थितैस्त्रिनक्षत्रैरुद्वेगवधबंधनं ॥ रेखाष्टकेभवेल्लाभः ऋक्षषट्कंतथापुनः ॥ ३५ ॥ शृंगद्वयेरोगभंगोमृत्युःशूलत्रयेस्फुटं ॥ विवादेविग्रहेयुद्धे रोगार्त्तेगमनेतथा ॥ ३६ ॥ सूर्यकालानलंचक्रं कथितंगणकोत्तमैः ॥ इतिसूर्यकालानलचक्रम् ॥ रवेर्वेधमनस्तापो द्रव्यहानिर्धरासुते ॥ ३७ ॥ रोगपीडाकरोमंदो राहुकेतूचमृत्युदौ ॥ गुरोर्वेधेभवेल्लाभो रतिलाभश्चभार्गवे ॥ ॥ ३८ ॥ स्त्रीलाभश्चंद्रवेधेन सुखंचबुधवेधतः ॥ जन्मराशेश्चवेधेन फलमेतत्प्रकीर्तितम् ॥ ३९ ॥ इतिजन्मराशिवेधफलम् ॥ दुर्गाकारंलिखेच्चक्रं रेखात्रयसमन्वितम् ॥ ईशानेग्रामनक्षत्रं दत्त्वाचाभिजितासह ॥ ४० ॥ चतुष्कंचचतुष्कंच कोणेषुसकलेषुच ॥ मध्येमध्येसग्रहंच दद्या

द्विज्ञस्त्रयंत्रयम् ॥ ४१ ॥ दुर्गमध्येस्थितेसूर्ये जलशोषःप्र
जायते ॥ चंद्रेभंगः कुजेदाहो बुधेबुद्धियुतोनृपः ॥४२॥
बृहस्पतौदुर्गमध्ये सुभिक्षंप्रचुरंभवेत् ॥ चलचित्तोनृपः
शुक्रे भेदभंगौशनैश्चरे ॥ ४३ ॥ राहुकेतौदुर्गमध्ये विष
दग्धोभवेन्नृपः ॥ सूर्यः शनैश्चरोभौमो राहुःकेतुर्यदा
स्थितः ॥ ४४ ॥ एतेग्रहादुर्गमध्ये दुर्गभंगः प्रजायते ॥
गुरुःशुक्रोबुधश्चंद्रो दुर्गमध्येयदास्थिताः ॥४५॥ तदादु
र्गोनभज्येत महेंद्रेणापिभेदितः ॥४६॥ इतिदुर्गचक्रम् ॥ मा
संशुक्रबुधादित्याः सपादद्विदिनंशशी ॥ भौमस्त्रिपक्षंजी
वोब्दं सार्धवर्षद्वयंशनिः ॥ राहुकेतुसदाभुंक्ते सार्द्धमेकंतु
वत्सरम् ॥ ४७ ॥ इतिरव्यादीनांमध्यमचारः ॥ नप
श्यतिशशीलग्नं लग्नस्वामीनपश्यति ॥ नपश्यतियदासू
र्यः सोन्यजातस्तदोच्यते ॥ ४८ ॥ सुतपतिरस्तगतोवा
पापयुतःपापमध्यगोवास्यात् ॥ संततिबाधांकुरुते केंद्रे
वापापसंयुतेचंद्रे ॥ ४९ ॥ उदयाद्यागतानाड्यस्तासाम
र्धेनसंख्यया॥सूर्यर्क्षाद्यद्भवेदृक्षं तेनलग्नस्यनिर्णयः ॥५०॥
तिस्रोमीनेचमेषेच चतस्रोवृषकुंभयोः ॥ मिथुनेमकरेपंच
पंचचापेचकर्कटे ॥ ५१ ॥ सूतिकायांस्त्रियोज्ञेयाः पंचक

न्यातुलेपिच ॥ योषितोन्येषुलग्नेषु तिस्रःप्रोक्तामनीषिभिः ॥ ५२ ॥ लग्नेतदीशपार्श्वेवा यावंतश्चखयायिनः ॥ धनगाव्ययगाश्चैव तावत्यःसूतिकाःस्मृताः ॥५३॥ चंद्रलग्नांतरस्थैर्वा ग्रहैस्तुल्याश्चसूतिकाः ॥ यथाराहुस्तथा शय्या मंगलःक्षेत्रभंगदः ॥ ५४ ॥ रविस्थानेभवेद्दीपः शनौलोहंनिगद्यते ॥ मेषादिद्वादशर्क्षेषु त्रिरावृत्तिक्रमेण तु ॥५५॥ पूर्वादिकंगृहद्वारं जन्मकालान्निगद्यते ॥५६॥ इति जन्मलग्नज्ञानम् ॥ अथाष्टोत्तरीदशा ॥ चत्वारिभानिपापेषु शुभेषुत्रीणियोजयेत् ॥ आर्द्रादिमृगपर्यंतं लिखेदभिजितासह ॥ ५७ ॥ षडादित्येचवर्षाणि चंद्रेपंचदशैव तु ॥ मंगलेचाष्टवर्षाणि बुधेसप्तदशैवतु ॥ ५८ ॥ शनौचदशवर्षाणि जीवेचैकोनाविंशतिः ॥ राहौद्वादशवर्षाणि शुक्रेसैकाचविंशतिः ॥ ५९ ॥ जन्मर्क्षगतनाडिघ्नं परायुःखगजैर्भजेत् ॥ लब्धंपरायुषं १०८ शोध्यं शेषमायुःस्फुटंभवेत ॥ ६० ॥ परमायुःप्रमाणेन १०८ गुणयेद्गतनाडिकाः ॥ नक्षत्रस्यहरेद्भागं नवत्या ९० तविशोधयेत् ॥ ६१ ॥ आर्द्राचतुष्कमादित्ये चंद्रेज्ञेयंमघात्रयं ॥ भौमे हस्तचतुष्कंस्यादनुराधात्रिकंबुधे ॥ ६२ ॥ पूषाचतुष्कं

मंदेच धनिष्ठात्रितयंगुरौ ॥ राहौबुध्न्यभचत्वारि कृत्तिका त्रितयंभृगौ ॥ ६३ ॥ दशादशाहताःकार्या भागोनंदैर्वि धीयते ॥ अंतर्दशेयंतस्यैवप्रथमंज्ञायतेदशा ॥ ६४ ॥ अथरविमहादशावर्ष ६ फलम् ॥ उद्विग्नचित्तःपरिनष्टवि त्तः शरीररोगःस्वजनैर्वियोगः ॥ निपीडितोराजजनैःप्रवा सी नरोश्वघातीचरवेर्दशायाम् ॥ ६५ ॥ अथरविदशाया मंतर्दशाः ॥ सूर्यमहादशायांसूर्यांतर्दशामासाः ४ । ० । ० । ० सूर्यस्यांतर्गतेसूर्ये लाभोराजकुलाद्भवेत् ॥ चित्त पीडाव्ययोर्थानां विप्रयोगश्चबंधुभिः ॥ ६६ ॥ रविदशा मध्येचंद्रांतर्दशामासादि १० । ० । ०।०। शत्रुनाशोर्थला भश्च चिंतानाशःसुखागमः ॥ सूर्यस्यांतर्गतेचंद्रे व्याधि नाशश्चजायते ॥ ६७ ॥ भौमांतर्दशामासादि ॥ ५ । १० । ० । ० । मणिमुक्ताकांचनंच जायतेत्रसुखंतथा ॥ प्रा प्यतेभूपतेर्मानः सूर्यस्यांतर्गतेकुजे ॥ ६८ ॥ बुधांतर्द शामासादि ११ । १० । ० । ० । विलाससुखदारिद्र्यं जायतेरोगसंभवः ॥ पामाविचर्चिकादीनि सूर्यस्यांतर्गते बुधे ॥ ६९ ॥ शनेरंतर्दशामासादि ६ । २० । ० । ० । राजभीतिःशत्रुभीतिः कलहोदुःखमेवच ॥ जायतेधनना

शश्च सूर्यस्यांतर्गतेशनौ ॥ ७० ॥ गुरुदशामासादि १२ । २० । ० । ० । निष्पापोऽव्यसनैर्हीनो नीरोगीधनवानपि ॥ प्राप्नोतिपदवींगुर्वीं सूर्यस्यांतर्गतेगुरौ ॥ ७१ ॥ राहुदशामासादि ८ । ० । ० । ० । व्यसनंवित्तनाशश्च शंकाचाथपराजयः ॥ सूर्यस्यान्तर्गतेराहौ द्यूतंबंधुजनैः कलिः ॥ ७२ ॥ शुक्रांतर्दशामासादि १४ । ० । ० । ० । ज्वररोगः शिरोरोगो नानापीडाकलेवरं ॥ क्वापिबंधुजनैःक्लेशः सूर्यस्यांतर्गतेसिते ॥ ७३ ॥ अथचंद्रमहादशावर्ष १६ फलम् ॥ गजाश्वरत्नानिमहाप्रतापो मिष्टान्नपानंविविधंसुखंच ॥ अरोगितासर्वजनानुरागो भवेद्दशायांशशिनोजनस्य ॥ ७४ ॥ अथचंद्रांतर्दशाः ॥ चंद्रमहादशामध्येचंद्रांतर्दशामासादि २६ । ० । ० । ० । शोभनस्त्रीसमायोगो वस्त्राभरणसंपदः ॥ शुभकन्यासमुत्पत्तिश्चंद्रस्यांतर्गतेविधौ ॥ ७५ ॥ भौमांतर्दशामासादि १३ । १० । ० । ० । असृक्पित्तरुजापीडा वह्निचोराद्युपद्रवः ॥ कलहःस्त्रीजनैः सार्द्धंचंद्रस्यांतर्गतेकुजे ॥७६॥ बुधांतर्दशामासादि २८ । १० । ० । ० । सर्वत्रलभतेलाभं गजवाजियनादिकं ॥ गोमहिष्यादिकंचापि चंद्र

स्यांतर्गतेबुधे ॥ ७७ ॥ शन्यंतर्दशामासादि १६ । २० । ० । ० उद्वेगोवित्तनाशश्च शोकःशत्रूदयाद्भयं ॥ कलहोबंधुवर्गेणचंद्रस्यांतर्गतेशनौ ॥ ७८ ॥ गुरोरंतर्दशामासादि ३१ । २० । ० । ० । धनधर्मादिसंपत्तिर्वस्त्रालंकारभूषणं ॥ सर्वत्रलभतेलाभं चंद्रस्यांतर्गतेगुरौ ॥ ७९ ॥ राह्वंतर्दशामासादि २० । ० । ० । ० । रिपुरोगाग्निभीतिश्च बंधुनाशोधनक्षयः ॥ भवेदुद्वेगचित्तश्च चंद्रस्यांतर्गतेत्वगौ ॥ ८० ॥ शुक्रांतर्दशामासादि ३९ । ० । ० । ० । उत्तमस्त्रीजनैर्योगो दिव्यकन्यासमुद्भवः ॥ धनधान्यादिलाभश्च चंद्रस्यांतर्गतेसिते ॥ ८१ ॥ रव्यंतर्दशामासादि १० । ० । ० । ० । लाभोराजकुलेभ्यश्च रोगनाशोरिपुक्षयः ॥ जायतेसुखमैश्वर्यं चंद्रस्यांतर्गतेरवौ ॥ ८२ ॥ अथभौममहादशावर्ष ८ फलं ॥ शस्त्राभिघातोनृपतेश्चपीडा चोराग्निभीतिश्चधनस्यहानिः ॥ कार्याभिघातश्चजनेषुदैन्यं भवेद्दशायांधरणीसुतस्य ॥ ८३ ॥ अथभौममहादशायामंतर्दशाः ॥ भौममहादशामध्येभौमांतर्दशामासादि ७ । ३ । २० । ० । शत्रुभिःसहसंमर्दोबंधुभिःसहविग्रहः ॥ स्त्रीसंगोरक्तपित्ताद्भीभौमस्यांत

र्गतेकुजे ॥ ८४ ॥ बुधांतर्दशामासादि ॥ १५ । ३ । २० । ० । शत्रुचोरनृपादिभ्यो महाभीतिःप्रजायते ॥ महाज्वरःकृमेःपीडा भौमस्यांतर्गतेबुधे ॥ ८५ ॥ शन्यंतर्दशामासाद्याः ८ । २६ । ४० । ० । धनक्षयोमहादुःखं जायतेत्रनिरंतरम् ॥ सदानरस्यविपदो भौमस्यांतर्गतेशनौ ॥ ८६ ॥ गुर्वंतर्दशामासाद्याः १६ । २६ । ४० । ० । धनलाभस्तीर्थलाभो देवब्राह्मणपूजनम् ॥ नृपार्त्तिकचिद्वेद्भीतिभौमस्यांतर्गतेगुरौ ॥ ८७ ॥ राह्वंतर्दशामासाद्याः १० । २० । ० । ० । शस्त्रचौराग्निभीतिःस्यात्कृषिस्त्रीधनपीडनम्॥यत्रतत्रभयंभंगो भौमस्यांतर्गतेत्वगौ ॥ ८८ ॥ शुक्रांतर्दशामासाद्याः १८ । २० । ० । ० । व्याधयःशत्रुभीतिश्च धननाशेप्युपद्रवः ॥ विदेशगमनंनृणां भौमस्यांतर्गतेसिते ॥ ८९ ॥ रव्यंतर्दशामासाद्याः ५ । १० । ० । ० । आरोग्यंसर्वतोभद्रं राजपूजाजयोत्सवः ॥ जायतेऽत्रधनप्राप्तिर्भौमस्यांतर्गतेरवौ ॥ ९० ॥ चंद्रांतर्दशामासाद्याः १३ । १० । ० । ० । नानावृत्तिसमुत्पन्नमणिमुक्तासमृद्धिमान् ॥ जायतेमनुजोनित्यं भौमस्यांतर्गतेविधौ ॥ ९१ ॥ अथबुधमहादशावर्ष १७

फलम् ॥ नानाविधैरर्थसुखैःसमेतो दिव्यांगनाकेलियुतो विलासी ॥ सर्वार्थसिद्धिर्बहुमानितोत्र महादशायांमनुजो बुधस्य ॥ ९२ ॥ अथबुधमहादशायामंतर्दशाः ॥ बुधमहादशायांबुधांतर्दशामासाद्याः ॥ ३२ । ३ । २० । ० । बुद्धिःकर्मानुरागश्च मित्रबंधुसमागमः ॥ शत्रूद्गमोदेहपीडा बुधस्यांतर्गतेबुधे ॥ ९३ ॥ शन्यंतर्दशामासाद्याः १८ । २६ । ४० । ० । अकस्माच्छत्रुसंसर्गो ह्यकस्मादर्थसंग्रहः ॥ संपर्कोग्निगरादीनां बुधस्यांतर्गतेशनौ ॥ ९४ ॥ गुर्वंतर्दशामासाद्याः ॥ ३५ । २६ । ४० । ० । स्वर्णादिधातुलाभश्च शरीरारोग्यमेवच ॥ संपत्तिर्धर्मलाभश्च बुधस्यांतर्गतेगुरौ ॥ ९५ ॥ राह्वंतर्दशामासाद्याः २२ । २० । ० । ० । प्रचंडसाहसत्वंच नानाकार्यैरणोद्यमः ॥ धनधर्मादिलाभश्च बुधस्यांतर्गतेत्वगौ ॥ ९६ ॥ भृग्वंतर्दशामासाद्याः ३९ । २० । ० । ० । गुरुदेवार्चने प्रीतिर्ज्ञानधर्मरतिस्तथा ॥ वस्त्रालंकरणैर्युक्तो बुधस्यांतर्गतेसिते ॥ ९७ ॥ रव्यंतर्दशामासाद्याः ११ । १० । ० । ० । व्याधिशत्रुभयैर्मुक्तः पुत्रधर्मधनागमः ॥ जायतेराजमान्योत्र बुधस्यांतर्गतेरवौ ॥ ९८ ॥ चंद्रस्यांतर्गतामा

साद्याः २८ । १० । ० । ० । क्षयरोगोत्रकुष्ठंच नानापी
डाकलेवरे॥गलरोगयुतोलोको बुधस्यांतर्गतेविधौ ॥९९
भौमांतर्दशामासाद्याः १५ । ३ । २० । ० । शिरोरोगी
गंडरोगी नानाक्लेशैर्निपीडितः ॥ यमभीतिश्चौरभीतिर्बु
धस्यांतर्गतेकुजे ॥ १०० ॥ ६०० ॥ अथशनिमहादशा
वर्ष १० फलम् ॥ मिथ्यापवादोविमुखोत्रबंधुर्वधोर्थहानि
श्चनिराशताच ॥ कार्याणिशून्यानिसुतादिहानिः क्लेशा
भवंत्येवशनेर्दशायाम् ॥ १ ॥ शनिमहादशामध्येशन्यंत
र्दशामासाद्याः ॥ ११ । ३ । २० । ० । शरीरेजायतेपी
डा पुत्रदारैश्चविग्रहः ॥ विदेशगमनंहानिः शनेरंतर्गतेश
नौ ॥ २ ॥ गुर्वंतर्दशामासाद्याः २१ । ३ । २० । ० ।
देवगोब्राह्मणार्चात्र पुत्रमित्रधनागमः ॥ प्राप्नोतिचगुरु
स्थानं शनेरंतर्गतेगुरौ ॥ ३ ॥ राह्वंतर्दशामासाद्याः १३
।१० । ० ।०। ज्वरातिसारपीडाच शत्रुभीतिर्धनक्षयः ॥
शस्त्रघातःशरीरेस्याच्छनेरंतर्गतेत्वगौ ॥ ४ ॥ शुक्रांतर्द
शामासाद्याः २३ । १० । ० । ० । जायाधनसुतैर्युक्तो
जायतेत्रजयान्वितः ॥ आयुरारोग्यमैश्वर्यंशनेरंतर्गतेसि
ते ॥ ५ ॥ रव्यंतर्दशामासाद्याः ६ । २० । ० । ० पुत्र

मित्रकलत्राणां हानिश्चार्थस्यजायते ॥ संशयोजीवित स्यापि शनेरंतर्गतेरवौ ॥ ६ ॥ चंद्रांतर्दशामासाद्याः ॥ १६ । २० । ० । ० । गोमहिष्यादिलाभाःस्युः स्त्रीलाभोविजयःसुखं ॥ जायतेकन्यकापत्यं शनेरंतर्गतेविधौ॥ ॥ ७ ॥ भौमांतर्दशामासाद्याः ८ । २६ । ४० । ० । देशत्यागोधनत्यागोरोगःशत्रुसमागमः ॥ जायतेत्रमहाभीतिःशनेरंतर्गतेकुजे ॥ ८ ॥ बुधांतर्दशामासाद्याः १८ । २६ । ४० । ० । धनप्राप्तिश्चबंधुभ्यः सौभाग्यंविजयःसुखं ॥ सभायांमान्यतविद्याच्छनेरंतर्गतेबुधे ॥ ९ ॥ अथ गुरुमहादशावर्ष १९ फलम् ॥ धर्मार्थकामैःपरिपूरितोत्र राजप्रतापैर्विनयैःसमेतः ॥ धनीजयीदारसुतादियुक्तोगुरोर्दशायांचनरोनिरोगी ॥ १० ॥ अथगुरुमहादशायामंतर्दशाः ॥ गुरुमहादशायांगुर्वंतर्दशामासाद्याः ४० । ३ । २० । ० । पुत्रोत्पत्तिर्धनाप्तिश्च सर्वरत्नपरिग्रहः ॥ जायतेधर्मलाभश्च गुरोरंतर्गतेगुरौ ॥ ११ ॥ राह्वंतर्दशामासाद्याः २८ । १० । ० । ० । विस्फोटकादिमोहश्च शोकोरोगोधनक्षयः ॥ शत्रूणांचभयंविद्याद्गुरोरंतर्गतेत्वगौ ॥ १२ ॥ शुक्रांतर्दशामासाद्याः ४४ । १० । ० । ०

कलहोमानसीपीडा वित्तनाशोमहाभयं ॥ जायतेस्त्रीवियोगश्च गुरोरंतर्गतेभृगौ ॥ १३ ॥ रव्यंतर्दशामासाद्याः १२ । २० । ० । ० । निर्भयःशत्रुनाशोत्र नृपपूजामहत्सुखं ॥ प्रचंडैःसहसंगश्च गुरोरंतर्गतेरवौ ॥ १४ ॥ चंद्रांतर्दशामासाद्याः ३१ । २० । ० । ० । बहुस्त्रीसंगमक्षीणः शत्रुपीडाविवर्जितः ॥ कन्यकापत्यलाभश्च गुरोरंतर्गते विधौ ॥ १५ ॥ भौमांतर्दशामासाद्याः १६ । २६ । ४० । ० । रिपुनाशोधनप्राप्तिः सर्वकार्यसमागमः ॥ सुखंसौभाग्यमारोग्यं गुरोरंतर्गतेकुजे ॥ १६ ॥ बुधांतर्दशामासाद्याः ३८ । २६ । ४० । ० । बुद्धिविज्ञानकौशल्यं धनबंधुसमागमः॥गुरुदेवाग्निभक्तिश्च गुरोरंतर्गतेबुधे ॥१७ शन्यंतर्दशामासाद्याः २१ । ३ । २० । ० । वेश्यास्त्रीद्यूतमद्यैश्च धनधान्यादिसंक्षयः ॥ जायतेलुप्तधर्मोत्र गुरोरंतर्गतेशनौ ॥ १८ ॥ अथराहुमहादशावर्ष १२ फलम् ॥ ज्ञानस्यहानिर्गमनंविदेशे धर्मस्यहानिर्विविधाश्चरोगाः ॥ सर्वत्रशून्यंतनुसंशयश्च राहोर्दशायांनियतंनरस्य॥१९॥ अथराहुमहादशायामंतर्दशाः ॥ राहुमहादशायांराह्वंतर्दशामासाद्याः १६ । ० । ० । ० । द्विजेंद्रैःसहसंसर्गः स्त्री

लाभोधनसंचयश्चः ॥ कलहोबंधुभिःसार्द्धं राहोरंतर्गतेत्वगौ ॥ २० ॥ शुक्रांतर्दशामासाद्याः २८ । ० । ० । ० । धर्मिष्ठःसत्यवादीच धनीरोगविवर्जितः ॥ जायतेराजमान्यश्च राहोरंतर्गतेसिते ॥ २१ ॥ रव्यंतर्दशामासाद्याः ८ । ० । ० । ० । पुत्रदुःखंमहाभीतिर्धननाशोमहाव्यथा ॥ अग्निचौरभयंक्वापि राहोरंतर्गतेरवौ ॥ २२ ॥ चंद्रांतर्दशामासाद्याः २० । ० । ० । ० । स्त्रीनाशोधननाशश्च कलहोबांधवैःसह ॥ महद्भयमवाप्नोति राहोरंतर्गतेविधौ ॥ ॥ २३ ॥ भौमांतर्दशामासाद्याः । १० । २ । ० । ० । विषशस्त्राग्निचौरेभ्यो भयंप्राप्नोतिदारुणं ॥ संशयोजीवनस्यापि राहोरंतर्गतेकुजे ॥ २४ ॥ बुधांतर्दशामासाद्याः २२ । २० । ० । ० । सुहृद्बंधुजनैर्योगो धनधान्यसुखागमः ॥ नकश्चिज्जायतेक्लेशो राहोरंतर्गतेबुधे ॥ २५ ॥ शन्यंतर्दशामासाद्याः १२ । १० । ० । ० । स्वदेशस्यपरित्यागः कुटुंबैःसहसंगमः ॥ भृत्यार्थयोस्तथानाशो राहोरंतर्गतेशनौ ॥ २६ ॥ गुर्वंतर्दशामासाद्याः २५ । १० । ० । ० । रोगहानिर्दुःखनाशो देवब्राह्मणपूजनं ॥ धनधान्यसमृद्धिश्च राहोरंतर्गतेगुरौ ॥ २७ ॥ अथशुक्रमहा

दशावर्ष २१ फलम् ॥ भूपालमान्योधनधान्यपूर्णो ह स्त्यश्वयुक्तःप्रमदानुरक्तः ॥ मंत्रप्रयोगेनिपुणश्चशास्त्रे कवेर्दशायांकुशलीमनुष्यः ॥ २८ ॥ अथशुक्रांतर्दशाफलानि ॥ शुक्रमहादशायांभृग्वंतर्दशामासाद्याः ॥ ४९ । ० । ० । ० । मानवृद्धिःसुतोत्पत्तिर्धनधान्यागमःसुखं ॥ स्वर्णांबरादिलाभोत्र शुक्रस्यांतर्गतेकवौ ॥ २९ ॥ रव्यंतर्दशामासाद्याः १४ । ० । ० । ० शत्रुनाशोजयोनित्यं नृपलाभोमहासुखं ॥ प्रचंडैःसहसंसर्गः शुक्रस्यांतर्गतेरवौ ॥ ३० ॥ चंद्रांतर्दशामासाद्याः ३६ । ० । ० । ० । गुरुदेवाग्निभक्तोत्र दुःखमल्पंसुखंतथा ॥ शत्रुमित्रजनैर्योगः शुक्रस्यांतर्गतेविधौ ॥ ३१ ॥ भौमांतर्दशामासाद्याः १८ । २० । ० । ० । संग्रामेत्ररिपून्जित्वा धनंकीर्तिश्च लभ्यते ॥ आरोग्यंसुखमैश्वर्यं शुक्रस्यांतर्गतेकुजे ॥ ३२ ॥ बुधांतर्दशामासाद्याः ३९ । २० । ० । ० । नखरोगः शिरोरोगो दुःखमामाशयोद्भवं ॥ शरीरेजायतेत्यंतं शुक्रस्यांतर्गतेबुधे ॥ ३३ ॥ शन्यंतर्दशामासाद्याः ॥ २३ । १० । ० । ० । वृद्धस्त्रीभिश्चसंसर्गः सुखंचार्थागमस्तथा ॥ शत्रुनाशःसुहृल्लाभःशुक्रस्यांतर्गतेशनौ ॥ ३४ ॥

गुर्वंतर्दशामासाद्याः ४४ । १० । ० । ० । धनधान्यसमृद्धिश्च नानाधर्मसुतान्वितः ॥ सेनाप्रभुत्वमाप्नोति भृगोरंतर्गतेगुरौ ॥ ३५ ॥ राह्वंतर्दशामासाद्याः ॥ २८ । ० ० । ० । वैरंविषादंदुःखंच सदोद्वेगोमहाभयं ॥ कदाचित्सुखमाप्नोति कवेरंतर्गतेत्वगौ ॥ ३६ ॥ इत्यष्टोत्तरीदशांतर्दशाफलम् ॥ अथविंशोत्तरीदशाः ॥ स्फुटमायुर्हतंखेटमानेनविभजेत्ततः ॥ परमायुः १२० प्रमाणेन दशाश्चांतर्दशाःस्मृताः ॥ ३७ ॥ षडा ६ दित्येदशें १० दौच सप्तवर्षाणि ७ मंगले ॥ अष्टादशसमा १८ राहौ षोडशाब्दा १६ बृहस्पतौ ॥ ३८ ॥ एकोनविंशति १९ मंदे बुधेसप्तदशै १७ वतु ॥ सप्तवर्षाणिकेतौ ७ च विंशति २० भार्गवेस्मृता ॥ ३९ ॥ कृत्तिकामवधिंकृत्वा भरणींचाधिगण्यते ॥ कृत्तिकादित्रिरावृत्त्या सूर्यादिर्गणयेत्क्रमात् ॥ ४० ॥ रविःशशीकुजोराहुर्जीवोमंदोबुधःशिखी ॥ शुक्रोग्निभाद्युफाभादि विश्वर्क्षादिनवेश्वराः ४१ अत्रविंशोत्तर्यामप्यष्टोत्तर्युक्तमहादशांतर्दशाफलानि रव्यादीनांज्ञेयानि ॥ तत्रकेतुदशायाअभावात्केतुदशांतर्दशाफलानिलिख्यंते॥ अथकेतुमहादशावर्ष ७ फलम्॥

लक्ष्मीविनाशोवनितार्थहानिःशरीरपीडानृपमानभंगः ॥ प्रियैःकुटुंबैश्चभवेद्वियोगःकेतोर्दशायांसततंचतापः॥४२
अथकेत्वंतर्दशाफलानि ॥ तत्रादौकेतुमहादशायांकेत्वंतर्दशामासाद्याः ॥ ४ । २७ । ० । ० । पुत्रनाशोर्थनाशश्च दुष्टनारीजनैःकलिः ॥ राजभीःशत्रुकलहःकेतोरंतर्गतेध्वजे ॥ ४३ ॥ शुक्रांतर्दशामासाद्याः ॥ १४ । ० । ० । ० । स्त्रीवियोगोवह्निदाहःकन्याजन्मतथावरः ॥ मित्रैःसहैवकलहःकेतोरंतर्गतेभृगौ ॥ ४४ ॥ रव्यंतर्दशामासाद्याः ॥ ४ । ६ । ० । ० । अग्निदाहोज्वरोघोरो विदेशगमनंतथा ॥ जायतेक्षयरोगश्च केतोरंतर्गतेरवौ॥४५॥ चंद्रांतर्दशामासाद्याः ॥ ७ । ० । ० । ० । अर्थलाभोर्थहानिश्च सुखंदुःखंक्वचित्क्वचित् ॥ स्त्रीलाभश्चापिभवति केतोरंतर्गतेविधौ ॥ ४६ ॥ भौमांतर्दशामासाद्याः ॥४॥ २७ । ० । ० । गोत्रजैःसहसंवादो वह्निचोरभयंतथा ॥ शरीरेजायतेपीडा केतोरंतर्गतेकुजे ॥ ४७ ॥ राह्वंतर्दशामासाद्याः ॥ १२ । १८ । ० । ० । चौरभीतिर्देहभंगः कुमित्रैःसहसंगतिः ॥ कलहःशत्रुभिःसाकं केतोरंतर्गते त्वगौ ॥ ४८ ॥ गुर्वंतर्दशामासाद्याः ॥ ११ । ६ । ०।०।

राजमान्यैर्जनैर्योगो द्विजेंद्रैश्चसुखागमः ॥ भूमिलाभःपुत्र लाभः केतोरंतर्गतेगुरौ ॥ ४९ ॥ शन्यंतर्दशामासाद्याः॥ १३। ९। ०। ०। वातपित्तकृतापीडा स्वजनैःसहवि ग्रहः ॥ देहपीडाभवेन्नित्यं केतोरंतर्गतेशनौ ॥ ५० ॥ बुधांतर्दशामासाद्याः ॥ ११। २७। ०। ०। सुहृद्बंधुस मायोगो भूनिमित्तंचविग्रहः ॥ सदाशरीरपीडास्यात्केतो रंतर्गतेबुधे ॥ ५१ ॥ अथरव्यादिग्रहमहादशासुकेत्वंतर्द शाफलानि ॥ तत्रादौरविमहादशायांकेत्वंतर्दशामासा द्याः ॥ ४। ६। ०। ०। देशत्यागोबंधुनाशो धननाशः सुतक्षयः ॥ सर्वत्रैवाशुभंप्रोक्तं सूर्यस्यांतर्गतेध्वजे॥५२॥ चंद्रमहादशायां केत्वंतर्दशामासाद्याः ॥ ७। ०। ०।०। चलचित्तोर्थनाशश्च रोगोबंधुजनक्षयः ॥ जायतेदुःखमे वात्र चंद्रस्यांतर्गतेध्वजे ॥ ५३ ॥ भौममहादशायांकेत्वं तर्दशामासाद्याः ॥ ४। २७। ०। ०। विषशस्त्राग्निचौ रेभ्यो जायतेत्रमहद्भयी ॥ सदानरःक्लेशभागी भौमस्यां तर्गतेध्वजे ॥ ५४ ॥ राहुमहादशायांकेत्वंतर्दशामासा द्याः ॥ १२। १८। ०। ०। ज्वराग्निरिपुशस्त्रेभ्यो मृ त्युरायातिसर्वदा ॥ जायतेघोरदुःखंच राहोरंतर्गतेध्वजे॥

॥ ५५ ॥ गुरुमहादशायांकेत्वंतर्दशामासाद्याः ॥ ११ ॥ ६ । ० । ० । पुत्रबंधुकृतोद्वेगो निजस्थानविवर्जितः ॥ गुरोरंतर्गतेकेतौ परिभ्रमणशीलवान् ॥ ५६ ॥ शनिमहादशायांकेत्वंतर्दशामासाद्याः ॥ १३ । ९ । ० । ० । रक्तपित्तकृतापीडा कलहःस्वजनैःसह ॥ शनेरंतर्गतेकेतौ घोरदुःस्वप्नदर्शनम् ॥५७॥ अथबुधमहादशायांकेत्वंतर्दशामासाद्याः ॥ ११ । २७ । ० । ० । फलम् ॥ शोकदुःखाकुलोनित्यं शरीरेक्लेशसंयुतः ॥ भवत्येवनसंदेहो बुधस्यांतर्गतेध्वजे ॥ ५८ ॥ केतुमहादशाफलम् पूर्वमेव लिख्यते ॥ अथकेतुमहादशायां७ केत्वंतर्दशामासाद्याः ॥ ४ । २७ । ० । ० । फलंलिषितम् ॥ अथशुक्रमहादशायांकेत्वंतर्दशामासाद्याः ॥ १४ । ० । ० । ० । विदेशभ्रमणंनॄणां रोगंमृत्युश्चसंभवेत् ॥ सस्यकोशादिलाभोंते शुक्रस्यांतर्गतेध्वजे ॥५९॥ अथवर्षदशाः ॥ जन्मलग्नं समारभ्य गतवर्षाणिवर्जयेत् ॥ हृतंद्वादशभिःशेषे ग्रहैर्वाच्यंशुभाशुभम् ॥६०॥ अथमासदशाः ॥ विंशति२० र्वासराःसूर्येपंचाश ५० च्चनिशाकरे ॥ सप्तविंशति २७ रंगारे सप्तपंचाश ५७ दिंदुजे ॥ ६१ ॥ त्रयस्त्रिंश ३३

ह्यमंदेस्युस्त्रिषष्टि ६३ श्चबृहस्पतौ ॥ विंशतिः २० सैं
हिकेयेच केतोरपिच विंशतिः २० ॥ ६२ ॥ सप्तति ७०
भृगुपुत्रेस्युर्ज्ञेयामासदशाबुधैः ॥ नामराशिंसमारभ्य सं
क्रमावधिगण्यते ॥ ६३ ॥ अथदिनदशाः ॥ तिथिवारंच
नक्षत्रं नामाक्षरसमन्वितं ॥ नवभि ९ स्तुहरेच्छेषंदिनग्र
हदशोच्यते ॥ ६४ ॥ इतिविंशोत्तरीग्रहक्रमेणदिनदशा॥
अन्यच्च ॥ चैत्रादेर्द्विगुणामासा गताभिस्तिथिभिर्युताः ॥
सप्तभिश्चहरेद्भागं शेषाद्दिनदशाफलम् ॥ ६५ ॥ संपत्तिः
कलहोलोकैरानंदःकालकंटकः ॥ धर्मस्तपश्चविजयो र
विवाराक्रमात्फलम् ॥ ६६ ॥ अथक्रूरग्रहशुभग्रहदशा
फलविचारः ॥ क्रूरग्रहदशायांचेत् क्रूरस्यांतर्दशायदा ॥
शत्रुयोगेभवेन्मृत्युर्मित्रयोगेचसंशयः ॥ ६७ ॥ मंगलस्य
दशायांचेच्छनेरंतर्दशायदि ॥ म्रियतेत्रचिरंजीवी काक
थास्वल्पजीविनाम् ॥६८॥ क्रूरराशौस्थितःपापः षष्ठेवा
निधनेपिवा ॥ सितेनरविणादृष्टः स्वपाकेमृत्युदायकः ॥
॥ ६९ ॥ लग्नस्याधिपतेः शत्रुर्लग्नस्यांतर्दशायदा ॥ क
रोत्यकस्मान्मरणंसत्याचार्येणभाषितम् ॥ ७० ॥ इतिद
शारिष्टम् ॥ दशायांबलवान्खेटः शुभैर्वासन्निरीक्षितः ॥

सौम्याधिमित्रवर्गस्थोरिष्टभंगकरस्तदा ॥ ७१ ॥ मूल पाकाधिनाथस्य वाचस्पतिदशायदि ॥ बलीशुभोथविज्ञेयोरिष्टभंगस्तदाबुधैः ॥ ७२ ॥ शुभग्रहोग्रहैर्युक्तो विजयीयदिजायते ॥ दशायांनभवेत्कष्टं स्वोच्चादिषुचसंस्थितः ॥ ७३ ॥ इतिश्रीसर्वदशारिष्टभंगाः ॥ इतिलग्नचंद्रिकायांतृतीयः परिच्छेदः ॥ ३ ॥ अथरविद्विग्रहयोगाः ॥ सू० चं० ॥ स्त्रीजितःकूटधर्माच दुर्विनीतोदयाहृढः ॥ विक्रमीलघुचेताश्च सूर्यचंद्रसमागमे ॥ ७४ ॥ सू० मं० ॥ मिथ्यावादीचमूर्खश्च वधनिष्ठोबलीनरः ॥ तेजस्वीपापचित्तश्च सूर्यभौमसमागमे ॥ ७५ ॥ सू० बु० ॥ विद्वानथीराजमान्यःसेवाशीलःप्रियंवदः ॥ यशस्वीचास्थिरद्रव्यः सूर्यसौम्यसमागमे ॥७६॥ सू० गु० ॥ नृपमान्योधर्मनिष्ठोमित्रवानर्थवानपि ॥ उपाध्यायोतिविख्यातोसूर्यजीवसमागमे ॥ ७७॥ सू० शु० ॥ शस्त्रप्रहारोवंधश्चरंगज्ञोनेत्रदुर्बलः ॥ स्त्रीसंगलब्धद्रव्यश्च शक्रोर्कभृगुसंगमे ॥ ॥ ७८ ॥ सू० श० ॥ विद्वानात्मक्रियानिष्ठो गुणज्ञोवृद्धचेष्टितः ॥ प्रनष्टसुतदारश्च सूर्यमंदसमागमे ॥७९॥१॥ अथचंद्रद्विग्रहयोगाः ॥ चं० मं० ॥ मृच्चर्मधातुशिल्पीच

धनीशूरोरणेभवेत् ॥ रक्तपीडातुरोनित्यं चंद्रभौमसमागमे ॥ ८० ॥ चं० बु० ॥ स्त्रीसंमतःसुरूपश्च काव्येतिनिपूणोभवेत् ॥ धनीगुणीहास्यवक्रश्चंद्रसौम्यसमागमे ॥ ॥ ८१ ॥ चं० गु० ॥ देवद्विजार्चसिक्तश्च बंधुमान्यकरो धनी ॥ दृढप्रीतिःसुशीलश्च चंद्रजीवसमागमे ॥ ८२ ॥ चं० शु० ॥ कुशलीविक्रयादौच वृद्धिज्ञःकलहप्रियः ॥ माल्यवस्त्रादिसंयुक्तः शशिभार्गवसंगमे ॥ ८३ ॥ चं० श० ॥ गजाश्वपालोदुःशीलो वृद्धस्त्रीरमणोनरः ॥ वेश्याधनोनपत्यश्च चंद्रमंदसमागमे ॥ ८४ ॥ अथभौमद्विग्रहयोगः ॥ मं० बु० ॥ स्त्रीदुर्भगःक्रयप्रीतिःस्वर्णलोहप्रकारकः ॥ निर्धनोविधवाभर्ता भूपुत्रबुधसंयुतौ ॥ ८५ ॥ मं० गु०॥ मेधावीशिल्पशास्त्रज्ञः श्रुतिज्ञोवाग्विशारदः॥ अश्वप्रियःप्रधानश्च भौमजीवसमागमे ॥ ८६ ॥ मं० शु० गुणप्रधानोनिपुणो द्यूतेऽनृतरतःशठः ॥ परदाररतोमान्यो भौमशुक्रसमागमे ॥ ८७ ॥ मं० श० वाग्मींद्रजालदक्षश्च विधर्माकलहप्रियः ॥ विषमद्यप्रपंचाढ्यो भौममंदसमागमे ॥ ८८ ॥ अथबुधद्विग्रहयोगः ॥ बु० गु० ॥ धैर्ययुक्तःपंडितश्च सुखीभवतिमानवः ॥ नृत्यवाद्येचकु

शलो बुधजीवसमागमे ॥ ८९ ॥ बु० शु० ॥ धनीसुवा क्योवेदज्ञो गीतेहास्येचलालसः ॥ नयज्ञोबहुशिल्पज्ञो बुधशुक्रसमागमे ॥ ९० ॥ बु० श० ॥ ऋणीगमनशील श्च निरुपायोतिनिष्ठुरः ॥ शुभवाक्यःकाव्यदक्षो बुधमंद समागमे ॥ ९१ ॥ अथगुरुद्विग्रहयोगः ॥ गु० शु० ॥ धर्मस्थितिःप्रमाणज्ञो विद्याजीवीचजायते ॥ दिव्यदारो बहुधनो गुरुभार्गवसंगमे ॥ ९२ ॥ गु० श० ॥ वृत्तिसिद्धिश्चशूरश्च यशस्वीनगराधिपः॥ श्रेणीसेनाग्राम मुख्यो गुरुमंदान्वयेनरः ॥ ९३ ॥ अथभृगुद्विग्रहयोगः॥ दारुदारणदक्षश्च क्षाराम्लादिकाशिल्पवित् ॥ मल्लःपशुप तिर्मंदचक्षुः शनिसितान्वये ॥ ९४ ॥ अथात्रिग्रहयोगाः॥ तत्रादौरवित्रिग्रहयोगाः ॥ सू० मं० बु० ॥ भानुभौमबु धैर्योगे ख्यातःसाहसिकोनरः ॥ निष्ठुरोगतलज्जश्च धनस्त्री पुत्रपीडितः ॥ ९५ ॥ सू० मं० गु०॥सूर्यभौमेज्यसंयोगे प्रचंडःसत्यभाषणः॥राजमंत्रीचमुख्यश्च वाक्येचानिपुणो भवेत् ॥९६॥ सू० मं०शु०॥सूर्यारशुक्रसंयोगे सुभगोभ जनेरतः॥कुलीनोवत्सलोलोके विषयासक्तमानसः॥९७॥ सू० मं० श० ॥ सूर्यारशनिसंयोगे मूर्खोंगोधनवर्जितः॥

रोगार्तःस्वजनैर्हीनो विकलःकलहाकुलः ॥ ९८ ॥ सू० बु० गु० ॥ सूर्यसौम्येज्यसंयोगे नेत्ररोगीमहाधनः ॥ शस्त्रशिल्पकलाभिज्ञो लिपिकर्त्ताभवेन्नरः ॥ ९९ ॥ सू० बु० शु० ॥ सूर्यज्ञशुक्रसंयोगे गुरुवर्गसमावृतः ॥ अभिशस्तोदिशोयाति स्त्रीहेतोस्ततमानसः ॥१००॥७००॥ सू० बु० श० ॥ सूर्यज्ञशनिभिर्योगे दुराचारःपराजितः बंधुभिश्चपरित्यक्तो विद्वेषीजायतेनरः ॥ १ ॥ सू० गु० शु०॥ सूर्येज्यशुक्रसंयोगे राजमंत्रीचनिर्धनः॥ दुष्टचक्षुर्भवेत्क्रूरः प्राज्ञश्चपरकर्मकृत् ॥ २ ॥ सू० गु० श० ॥ सूर्येज्यशनिभिर्योगे पुत्रमित्रकलत्रवान् ॥ निर्भयोनृपनिष्टश्च द्वेष्योबंधुजनस्यच ॥ ३ ॥ सू शु० श० सूर्यशुक्रार्किसंयोगे कलामानविवर्जितः ॥ कुष्ठीशत्रुजयोद्विग्नो दुराचारीभवेन्नरः ॥ ४ ॥ चं० मं० बु० ॥ चंद्रारबुधसंयोगे त्वनाचारीचपापकृत् ॥ आजीवितहतोलोके बंधुहीनश्चजायते ॥ ५ ॥ चं० मं० गु० ॥ चंद्रभौमेज्यसंयोगे स्त्रीलोलोव्रणसंयुतः ॥ कांतश्चसंमतःस्त्रीणां चंद्रतुल्यमुखोद्भवेत् ॥ ६ ॥ चं० मं०शु०॥ चंद्रारभृगुसंयोगे दुःशीलायाःपतिःसुतः ॥ सदाभ्रमणशीलश्च शीतभीतोपिजा

यते ॥ ७ ॥ चं० म० श० ॥ चंद्रारशनिभिर्योगे बाल्ये
चमृतमातृकः ॥ क्षुद्रश्चलोकविद्विष्टो विषमोजायतेनरः॥
॥ ८॥ चं० बु० गु० ॥ चंद्रज्ञजीवैःसंयोगे यशस्वीधन
वानपि ॥ पुत्रमित्रादिसंयुक्तो वाग्मीख्यातश्चकीर्तिमान्॥
॥ ९ ॥ चं० बु० शु० ॥ चंद्रज्ञभार्गवैर्योगे विद्यासंयु
तोनरः॥सेर्ष्योधनातिलोभीच नीचाचारश्चजायते॥१०॥
चं० बु० श० ॥ चंद्रज्ञशनिभिर्योगे प्राज्ञोभूपतिपूजितः
अत्युच्चोविपुलांगश्च वाग्मीभवतिमानवः ॥ ११ ॥ चं०
गु० शु० ॥ चंद्रेज्यशुक्रसंयोगे साध्वीपुत्रश्चपंडितः ॥
साधुःसर्वकलाभिज्ञः सुभगोजायतेनरः ॥ १२ ॥ चं०
गु० श० ॥ चंद्रेज्यशनिभिर्योगे नीरोगःस्त्रीरतोनरः ॥
शास्त्रार्थविज्ञोनीतिज्ञो ग्रामपत्तनपालकः ॥ १३ ॥ चं०
शु० श० ॥ चंद्रशुक्रार्किभिर्योगे लिपिकर्त्ताचवेदवित्॥
पुरोहितकुलोत्पत्तिर्भवेत्पुस्तकवाचकः ॥ १४ ॥ मं०
बु० गु० ॥ भौमज्ञजीवैःसंयोगे सुकविर्युवतीपतिः ॥ प
रोपकारकृत्तीक्ष्णो गंधर्वकुशलोनरः ॥ १५ ॥ मं० बु०
शु० ॥ भौमज्ञभृगुभिर्योगे विकलांगश्चचंचलः ॥ अकु
लीनःसदोत्साही हृतश्चमुखरोनरः ॥ १६ ॥ मं० बु०

श० ॥ कुजज्ञशनिभिर्योगे प्रवासीनेत्ररोगवान् ॥ प्रेष्यो वदनरोगीच हास्यलुब्धोभवेन्नरः ॥ १७ ॥ मं० गु० शु० ॥ कुजेज्यभृगुभिर्योगे दिव्यनारीयुतःसुखी ॥ सर्वानंदकरोलोके जायतेनृपतिप्रियः ॥ १८ ॥ मं० गु० श० भौमजीवार्किभिर्योगे क्षतांगोराजसंमतः ॥ नीचाचारोनिर्घृणश्च भवेन्मित्रैर्विगर्हितः ॥ १९ ॥ मं० शु० श० ॥ कुजशुक्रार्किसंयोगे दुःशीलायाःपतिःसुतः ॥ प्रवासशीलोदुःखीच जायतेजातकःसदा ॥ २० ॥ बु० गु० शु० बुधेज्यभृगुसंयोगे सुतनुर्नृपपूजितः ॥ क्षत्तारिदीर्घकीर्त्तिश्च सत्यवादीभवेन्नरः ॥ २१ ॥ बु० गु० श० ॥ बुधजीवार्किसंयोगे सुदारोबहुभोगवान् ॥ धनैश्वर्ययुतःप्रायः सुखधैर्ययुतोभवेत् ॥ २२ ॥ बु० शु० श० ॥ बुधशुक्रार्किभिर्योगे मुखरःपरदारगः ॥ असंगत्यकलाभिज्ञः स्वदेशनिरतोजनः ॥ २३ ॥ गु० शु० श० गुरुशुक्रार्किभिर्योगे राजाभवतिकीर्तिमान् ॥ नीचवंशेपिसंभूतः शीलयुक्तोनृपोत्तमः ॥ २४ ॥ प्रायःपापैर्युतेचंद्रे मातुर्नाशोरवौपितुः ॥ शुभग्रहैःशुभंवाच्यं मिश्रैर्मिश्रंफलंवदेत् ॥ २५ ॥ शुभास्त्रयोग्रहायुक्ताः कुर्वंतिसुखिनंनरम् ॥ पा

पास्त्रयोदुःखितंच दुर्विनीतंविगर्हितम् ॥ २६ ॥ इतित्रिग्रहपरिच्छेदः ॥ सू० चं० मं० बु० ॥ अर्केंदुकुजसौम्यानां योगेलिपिकरोभवेत् ॥ तस्करोमुखरोवाग्मी मायायां कुशलोभिषक् ॥ २७ ॥ सू० चं० मं० गु० ॥ सूर्येंदुकुजजीवानां संयोगेनिपुणोधनी ॥ तेजस्वीगतशोकश्च नीतिज्ञश्चभवेन्नरः ॥ २८ ॥ सू० चं० मं० शु० ॥ रवींदुभौमशुक्राणां योगेविद्यार्थसंग्रही ॥ सुखीपुत्रीकलत्रीच वाग्वृत्तिर्मनुजोभवेत् ॥ २९ ॥ सू० चं० मं० श० ॥ अर्केंदुकुजमंदानां योगेमूर्खश्चनिर्धनः ॥ ह्रस्वोविषमदेहश्च भिक्षावृत्तिर्भवेन्नरः ॥ ३० ॥ सू० चं० बु० गु० ॥ अर्केंदुबुधजीवानां योगेशिल्पकरोधनी ॥ सौवर्णिकःस्तुताक्षश्च रोगहीनश्चजायते ॥ ३१ ॥ सू० चं० बु० शु० ॥ रविचन्द्रज्ञशुक्राणां संयोगेसुभगोनरः ॥ ह्रस्वश्चराज्यमान्यश्च वाग्मीचविकलोनरः ॥ ३२ ॥ सू० चं० बु० श० ॥ रविचंद्रज्ञमंदानां योगेभिक्षाशनोनरः ॥ वियुक्तःपितृमातृभ्यां विकलाक्षश्चनिर्धनः ॥ ३३ ॥ सू०चं०गु० शु० ॥ सूर्यचंद्रेज्यशुक्राणां संबंधेराजपूजितः ॥ जलारण्यमृगस्वामीनरःस्यान्निपुणःसुखी ॥ ३४ ॥ सू० चं० गु० श० ॥

सूर्यचंद्रेज्यमंदानां मान्यश्चवनिताप्रियः ॥ बहुवित्तसुत
स्तीक्ष्णः समाक्षश्चप्रजायते ॥ ३५ ॥ सू० चं० शु०श०
रवींदुभृगुमंदानां योगेचात्यंतदुर्बलः ॥ वनितासदृशाचा
रो भीरुरग्रेसरोनरः ॥ ३६ ॥ सू० मं० बु० गु० ॥ अर्क
भौमबुधेज्यानां योगेसूत्रकरोनरः ॥ परदाररतःशूरो दुः
खीचक्रधरोभवेत् ॥ ३७ ॥ सू० चं० मं० शु० ॥ रवींदु
कुजशुक्राणां संयोगेपारदारिकः ॥ निर्लज्जोदुर्जनश्चौरो
विषमांगोजनोभवेत् ॥ ३८ ॥ सू० मं० बु० श० ॥ र
विभौमबुधार्कीणां योगेयोद्धाकविर्जनः ॥ मंत्रीचमूपति
स्तीक्ष्णो नीचाचारश्चजायते ॥ ३९ ॥ सू० मं० गु०
शु० ॥ रविभौमेज्यशुक्राणां योगेपूज्योधनीजनः ॥ सुभ
गोनृपमान्यश्च ख्यातोभवतिनीतिभाक् ॥ ४० ॥ सू०
मं० गु० श० ॥ रविभौमेज्यमंदानां संयोगेगणनायकः॥
सोन्मादोनृपमान्यश्च सिद्धार्थोजायतेनरः ॥ ४१ ॥ सू०
मं० शु० श०॥ रविभौमसितार्कीणां संयोगेजायतेनरः॥
लोकद्वेष्टासमाक्षश्च नीचाचारोजडाकृतिः ॥४२ ॥ सू०
बु० गु०शु० रविज्ञजीवशुक्राणां योगेबहुमतिर्नरः॥धनी
सुखीचसिद्धार्थः प्रगल्भश्चप्रजायते ॥ ४३ ॥ सू० बु०

गु० श० सूर्यज्ञगुरुमंदानां संयोगेजायतेनरः ॥ भ्रातृमान्कलहीमानीक्लीबाचारीनिरुद्यमः ॥ ४४ ॥ सू० बु० शु० श०॥रविज्ञभृगुमंदानां योगेमित्रयुतःशुचिः ॥ मुखरःसुभगःप्राज्ञो जायतेचसुखीनरः ॥ ४५ ॥ सू० गु० शु० श० ॥ रवीज्यभृगुमंदानां संयोगेलोभमानवान् ॥ कविः कारुकनाथश्च राजप्रीतोभवेन्नरः ॥ ४६ ॥ चं० मं० बु० गु० ॥ चंद्रारबुधजीवानां योगेशास्त्रविचक्षणः॥ नरेंद्रस्यकृपापात्रो महाबुद्धिर्नरोभवेत् ॥४७॥ चं० मं० बु० शु० ॥ चंद्रभौमज्ञशुक्राणामन्वयेबंधकीपातिः ॥ निद्रालुःकलहीनीचो बंधुद्वेषीनरोभवेत् ॥ ४८॥ चं० मं० शु० श० ॥ चंद्रभौमज्ञमंदानां योगेशूरकुलोद्भवः॥ पुत्रमित्रकलत्रीच द्विमातृपितृकोजनः ॥ ४९ ॥ चं०मं० गु० शु० ॥ चंद्रारगुरुशुक्राणां योगेसाहसिकोनरः ॥ विकलांगोधनीपुत्री मानीप्राज्ञोपिजायते ॥ ५० ॥ चं० मं० गु० श० ॥ चंद्रारजीवमंदानां संयोगेबाधिरोऽधनः॥ सोन्मादःस्थिरवाक्यश्च शूरोविज्ञोभवेन्नरः॥५१॥ चं० मं० शु० श० चंद्रारभृगुमंदानां मिलनेकुलटापतिः ॥ सोद्वेगः सर्पतुल्याक्षःप्रगल्भोजायतेनरः ॥ ५२ ॥

चं० शु० बु० गु० ॥ चंद्रज्ञजीवशुक्राणां मिलनेसुभगो धनी ॥ द्विमातृपितृकःप्राज्ञो गतारिर्जायतेनरः ॥ ५३ ॥
चं० बु० गु० श० ॥ चंद्रज्ञगुरुमंदानां योगेबंधुप्रियःक विः ॥ तेजस्वीराजमंत्रीच यशोधर्मयुतोनरः ॥ ५४ ॥
चं० बु० शु० श० ॥ इंदुज्ञभृगुमंदानां योगेमात्राविव र्जितः ॥ त्वग्दोषीसुभगोदुःखी बहुभार्योभवेन्नरः॥५५॥
चं० गु० शु० श० ॥ चंद्रेज्यासितसौरीणामन्वयेपार दारिकः॥ प्राज्ञोनिर्द्रव्यबंधुश्च स्थूलभार्योभवेन्नरः॥५६॥
मं०गु०बु०शु०॥ भौमज्ञगुरुशुक्राणां योगेस्त्रीकलहप्रि यः॥ धनीसुशीलोनीरोगी लोकपूज्योभवेन्नरः ॥ ५७ ॥
मं०बु०गु०श०॥भौमज्ञगुरुसौरीणां योगेशूरश्चनिर्धनः॥ सत्यशौचयुतोविद्वान्वादीवाग्मीनरोभवेत् ॥ ५८ ॥ मं० बु०शु०श० ॥ भौमज्ञभृगुमंदानां सारमेयरुचिर्भवेत् ॥ मल्लोन्यपुष्टोयोद्धाच दृढांगोजायतेनरः॥ ५९ ॥ मं०गु० शु०श० ॥ भौमेज्यभृगुमंदानां मिलनेसाहसप्रियः ॥ ध नीसतेजाः स्त्रीलोलः कितवोजायतेनरः ॥ ६० ॥ बु० गु०शु०श० ॥ बुधेज्यभृगुमंदानां योगेकामातुरोजनः ॥ विधेयभृत्योमेधावी तीव्रशास्त्ररतोभवेत् ॥ ६१ ॥ इति

श्रीसर्व० चतुर्ग्रहयोगपरिच्छेदः ॥ सू०चं०मं०बु०गु० ॥
बहुप्रपंचोदुःखीच जायाविरहतोपितः ॥ सूर्याद्यैर्जीवपर्य
तैर्नरस्यात्पंचभिर्ग्रहैः ॥ ६२ ॥ सू०चं०मं०बु०शु० ॥
गतसत्योबंधुहीनःपरकर्मकरोनरः ॥ क्लीबस्यचसखासूर्य
श्चंद्रारबुधभार्गवैः ॥ ६३ ॥ सू०चं०मं०बु०श० ॥ अ
ल्पायुर्विकलत्रश्च दुःखीसुतविवर्जितः ॥ रवींदुभौमज्ञा
र्कीणां योगेबंधनभागपि ॥ ६४ ॥ सू०चं०मं०गु०शु० ॥
जात्यंधोबहुदुःखीच पितृमातृविवर्जितः ॥ गानप्रीतोन
रोभानुचंद्रारगुरुभार्गवैः ॥६५॥ सू०चं०मं०गु०श० ॥
परद्रव्यहरोयोद्धा परतापकरःखलः ॥ समर्थोजायतेसूर्य
चंद्रारगुरुसौरिभिः ॥६६॥ सू०चं०मं०शु०श०मानाचार
धनैर्हीनःपरदाररतोनरः ॥ एकस्थैर्जायतेभानुचंद्रारभृ
गुसौरिभिः ॥ ६७ ॥ सू०चं०बु०गु०शु०राजमंत्रीभूरिवि
त्तो यंत्रज्ञोदंडनायकः ॥ ख्यातोजनोयशस्वीच रवींदुज्ञे
ज्यभार्गवैः ॥ ६८ ॥ सू०चं०बु०गु०श० ॥ परान्नभो
जीसोन्मादःप्रियतत्तश्चवंचकः ॥ उग्रोभीरुर्नरःसूर्यश्चंद्र
ज्ञगुरुसौरिभिः ॥ ६९ ॥ सू०चं०बु०शु०श० ॥ धनपुत्र
सुखैर्हीनो मृत्यूत्साहीचलोमशः ॥ दीर्घोभवतिसूर्यें

न्दुबुधशुक्रशनैश्चरैः ॥ ७० ॥ सू० चं० गु० शु० श० ॥ इंद्रजालरतोवाग्मी चलचित्तोंगनाप्रियः ॥ प्रायशः शत्रुभिर्भीतो रवींद्वीज्यसितासितैः ॥ ७१ ॥ सू० मं० बु० गु० शु० ॥ स्फीतोबहुहयःकामी नरो शोकश्चभूपतिः ॥ सूर्यारज्ञेज्यशुक्राणां योगेभूपतिवल्ल भः ॥ ७२ ॥ सू० मं० बु० गु० श० ॥ भिक्षाभोगीच रोगीच नित्योद्वेगीमलीमसः ॥ जीर्णोनरोभानुभौमज्ञ जीवशनिभिर्भवेत् ॥ ७३ ॥ सू० मं० बु० शु० श० ॥ व्याधिभिःशत्रुभिर्ग्रस्तः स्थानभ्रष्टोबुभुक्षितः ॥ नरः स्याद्विकलःसूर्यकुजज्ञभृगुसौरिभिः ॥ ७४ ॥ सू० मं० गु० शु० श० ॥ विज्ञोविचारवांश्चैव धातुयंत्ररसायने ॥ नरःप्रसिद्धोरव्यारगुरुशुक्रार्किभिर्युतैः ॥ ७५ ॥ सू० बु० गु० शु० श० ॥ मित्रप्रियःशास्त्रवेत्ता धार्मिकोगुरु संमतः ॥ दयालुः सूर्यसौम्येज्यभृगुपुत्रशनैश्चरैः ॥७६॥ चं०मं०बु०गु०शु०॥ साधुःकलमषहीनश्च धनविद्यासुखा न्वितः॥ बहुमित्रोनरश्चंभौद्रमज्ञगुरुभार्गवैः॥७७॥चं०मं० गु० शु० श० ॥ परान्नपाचकोनिःस्वो मलिनस्ति मिरामयी ॥ नरोभवतिचंद्रारजीवशुक्रशनैश्चरैः ॥

॥ ७८ ॥ चं० मं० बु० शु० श० ॥ बहुमित्रारिप क्षश्च दुःशीलःपरपीडकः ॥ मानीनरश्चंद्रभौमबुधशुक्र शनैश्चरैः ॥ ७९ ॥ चं० बु० गु० शु० श० ॥ राजमं त्रीराजतुल्यो लोकपूज्योगणाधिपः ॥ चंद्रज्ञगुरुशुक्रा र्कि योगेजातोभवेन्नरः ॥ ८० ॥ मं० बु० गु० शु० श० अशोकस्तामसोनिःस्वः सोन्मादोराजवल्लभः ॥ निद्रातु रोभौमबुधजीवशुक्रशनैश्चरैः ॥ ८१ ॥ इति श्रीसर्वपंच ग्रहयोगपरिच्छेदः ॥ सू० चं० मं० बु० गु० शु० ॥ विद्याधर्मधनैर्युक्तो बहुभाषीचभाग्यवान् ॥ सूर्याद्यैःशु क्रपर्यंतैर्लाभोभवतिषट्ग्रहैः ॥ ८२ ॥ सू० चं० मं० बु० गु० श० ॥ परकार्यरतोदाता शुद्धात्माचंचलाकृ तिः ॥ षड्भिर्ग्रहैर्विनाशुक्रे रमतेविजनेजनः ॥ ८३ ॥ सू० चं० मं० बु० शु० श० ॥ संशयीसुभगोमानी ख्यातोयुद्धेरिमर्दकः॥विनाजीवंग्रहैः षड्भिर्वनादौरमतेज नः ॥ ८४ ॥ सू० चं० मं० गु० शु० श० ॥ अर्थप्रि योरणोत्साही पिशुनः क्रोधलोभवान् ॥ अर्केंदुभौमशु क्रेज्यमंदैश्चसुभगोनरः ॥ ८५ ॥ सू० चं० बु० गु० शु०श० ॥ कलत्रहीनोनिर्द्रव्यो राजमंत्रीक्षमायुतः ॥

रवीन्दुबुधजीवास्फुजिन्मंदैःशुभगोनरः ॥ ८६ ॥ सू॰
मं॰ बु॰ गु॰ शु॰ श॰ ॥ धनदारसुतैर्हीनस्तीर्थगामीव
नाश्रितः ॥ सूर्यारज्ञेज्यशुक्रार्कपुत्रैर्योगेभवेन्नरः ॥ ८७ ॥
चं॰मं॰बु॰गु॰शु॰ श॰॥धनीपुत्रीशुचिर्मंत्री बहुभार्योनृ
पप्रियः ॥ विनासूर्यंग्रहैःषड्भिः प्रतापीजायतेनरः ॥८८॥
प्रायोदरिद्रोमूर्खश्चषड्भिर्वापंचभिर्ग्रहैः ॥ अन्योन्यदर्शना
त्तेषां फलमेतत्प्रकीर्तितम् ॥ ८९ ॥ इति श्रीसर्व॰षड्ग्र
हयोगपरिच्छेदः ॥ लग्नात्सप्तमपर्यंतं ग्रहैःसर्वैःशुभाशु
भैः ॥ क्रमेणसंस्थितैःप्रोक्तो योगोनौकाभिधोबुधैः॥९०॥
अन्योपजीवविभवो बह्वायुःख्यातकीर्तिमान् ॥ कृपणोम
लिनोलुब्धो नौयोगेचंचलोनरः॥९१॥ चतुर्थात्कर्मपर्यंतैः
क्रमेणपतितैर्ग्रहैः ॥ विख्यातः कूटनामासौ योगःप्रोक्तोम
नीषिभिः ॥ ९२ ॥ मिथ्यावादीशठःक्रूरः कितवोबंधुपाल
कः॥निष्किंचनः शैलवासी कूटयोगभवोनरः ॥९३॥ सप्त
माल्लग्नपर्यंतैः खेटैःसर्वैःशुभाशुभैः ॥ छत्रयोगःसमाख्या
तो ब्रह्मरुद्रादिभिःसुरैः ॥ ९४ ॥ प्रकृष्टधीर्दयालुश्च दी
र्घायुःस्वजनाश्रयः ॥ वयसिप्रथमेंत्येचसुखीछत्रप्रियोन
रः ॥ ९५ ॥ दशमाच्चचतुर्थांतैर्गगनेन्द्रैः शुभाशुभैः ॥ गतै

योगःकार्मुकाख्यः ख्यातोसौपंडितोत्तमैः ॥९६॥ वयोम ध्येभाग्यहीनोगुप्तिपालोवनेरतः ॥ मिथ्यावादीचचौरश्च कार्मुकेजायतेनरः ॥ ९७ ॥ लग्नास्तयोर्ग्रहैःसौम्यैः पापै श्चसुखकर्मगैः ॥ वज्रःस्याद्विपरीतस्थैर्यवःपद्मंचमिश्रितैः ॥ ९८ ॥ सुखीचसुभगःशूरो मध्येभाग्येनवर्जितः ॥ निःस्ने हश्चविरुद्धश्च वज्रयोगेखलोनरः ॥ ९९ ॥ दाताचस्थिर चित्तश्च व्रतादिनियमैर्युतः ॥ मध्येसुखार्थपुण्याढ्यो यव योगेजनोभवेत् ॥ १०० ॥ स्थिरायुर्दीर्घकीर्तिश्च कांता शुभशतैर्युतः॥भूयोगुणमदैर्युक्तः पद्मयोगेजनोभवेत्॥१॥ लग्नाद्वितीयगैःसर्वैर्ग्रहैर्वापीप्रकीर्तिता ॥ शकटंवास्तल ग्नस्थैर्विहगःसुखकर्मगैः ॥ २ ॥ निपुणोनिधिकार्येषु स्थि रद्रव्यःसुखैर्युतः॥प्रहृष्टमुखनेत्रश्च तृप्तोवाप्यांनरःसदा३॥ मूर्खःकुभार्योरोगार्तः शकटप्राप्तजीविकः ॥ निःस्वोबंधु विहीनश्च शकटेजायतेनरः ॥ ४ ॥ भ्रमणेतिरुचिर्हृष्टः सुरतप्राप्तजीविकः ॥ निकृष्टःकलहप्रीतो विहंगेमानवो भवेत् ॥ ५ ॥ केंद्रस्थानाद्वितीयस्थैर्ग्रहैर्जलधिरुच्यते॥ कंटकेभ्यस्तृतीयस्थैश्चक्रंसर्वैर्ग्रहैः स्मृतम् ॥ ६ ॥ बह्वर्थ रत्नसंपन्नः पुत्रीभोगीजनप्रियः ॥ सुशीलःस्थिरचित्तश्च

जलधौजायतेनरः ॥ ७ ॥ प्रणताशेषपाताच सत्से
वितपदांबुजः ॥ चक्रयोगेसमुत्पन्नो महाराजोभवेन्नरः॥
॥ ८ ॥ धनस्थानेत्रिकोणेच ग्रहैः सर्वैर्हलंस्मृतम्॥ लग्न
त्रिकोणगैः खेटैःशृंगाटकमुदाहृतम् ॥ ९ ॥ बह्वाशीचद
रिद्रीच कर्षकोबंधुवर्जितः ॥ सोद्वेगोदुःखितःप्रेष्यो हल
योगभवोनरः ॥ १० ॥ हास्यवक्रःशुभाचारो नृपभी
तःकलिप्रियः॥ धनाढ्योयुवतिप्रेष्यो योगेशृंगाटकेनरः
॥ ११ ॥ लग्नमारभ्यकेन्द्रेभ्यो द्वितीयस्थैश्चतुर्ग्रहैः॥
यूपबाणौशक्तिदंडौ चत्वारोऽमीस्मृताबुधैः ॥ १२ ॥ आ
त्मरक्षारतस्त्यागी सुखसत्यव्रतैर्युतः ॥ विशिष्टोमंत्रवा
दीच यूपयोगेनरोभवेत् ॥ १३ ॥ शरकर्त्तादस्युसेवी
मांसादोमृगबंधनः ॥ हिंसकःशिल्पकारीच शरयोगोद्भ
वोभवेत्॥ १४॥चिरायुर्युद्धदक्षश्च सुभगःसुस्थिरोऽलसः॥
नीचोदुःखीदरिद्रश्च शक्तियोगेभवेन्नरः ॥ १५ ॥ निःस्वो
नष्टसुतस्त्रीको बंधुबाह्यःसुनिर्घृणः ॥ नीचप्रेष्यो
दुःखितश्च दंडयोगेभवेन्नरः ॥ १६ ॥ केंद्राद्द्वितीयस्था
नस्थैः सप्तऋक्षगतैर्ग्रहैः ॥ अर्धचंद्रोगदाप्रोक्ता केंद्रात्पा
र्श्वद्वयस्थितैः ॥ १७ ॥ बलीराजाप्रियःकांतो हेमरत्नैर

लंकृतः ॥ अर्द्धचंद्रेचभूनाथः सुभगोजायतेनरः ॥ १८ ॥
शास्त्रेयोगेप्रवीणश्च सद्योयुक्तार्थतत्परः ॥ यज्वाधनीसुप्र
सन्नो गदायोगोद्भवोनरः ॥ १९ ॥ एकराशिस्थितैर्ल
ग्नाद्ग्रहैर्गोलोयुगःक्रमात् ॥ शूलकेदारपाशाश्च दामि
नीवीणयासह ॥ २० ॥ विद्याहीनोधनैर्हीनोमानही
नोतिदुःखितः ॥ गोलयोगेसमुत्पन्नो मलिनोजाय
तेनरः ॥ २१ ॥ पाखंडभाग्योनिर्द्रव्यः पुत्रमातृविव
र्जितः ॥ युगयोगेधर्महीनो लोकनिंद्योपिजायते ॥ २२ ॥
तीक्ष्णोलसोनिर्धनश्च हिंस्रःशूरोबहिष्कृतः ॥ संग्रामल
ब्धशब्दश्चशूलयोगेजनोभवेत् ॥ २३ ॥ कृषौरतःसत्य
वादी स्वबाहुविहितोदयः ॥ धनीसुखीचंचलात्माकेदारो
त्थोनरोभवेत् ॥ २४ ॥ कार्यदक्षः प्रपंचीच बहुभाषीच
बंधुभाक् ॥ विशीलोबहुलक्ष्मीको पाशेभृत्ययुतोभवेत्
॥ २५ ॥ उपकारीधनीमूढः पशुपुत्रसमृद्धिमान् ॥ दाम
योगभवोलोके रत्नैर्भवतिपूरितः ॥ २६ ॥ नृत्यगीतप्रि
योनेता बहुभृत्योधनीसुखी ॥ कार्येषुनिपुणोलोको वी
णायोगेचजायते ॥ २७ ॥ द्विस्वभावेस्थिरेखेटैश्चरेचस
कलैःस्थितैः ॥ नलोथमुसलोरज्जुर्य्योगाःप्रोक्ताःपुरातनैः

॥ २८ ॥ न्यूनातिरिक्तदेहश्च निपुणोधनसंचयी ॥ बंधु
प्रियःसुरूपश्च नलयोगेभवेन्नरः ॥ २९ ॥ राजमानधनैर्यु
क्तः ख्यातःपुत्रीनृपप्रियः ॥ मुसलेस्थिरचित्तश्च कर्मोद्यु
क्तश्चजायते ॥ ३० ॥ परदेशद्रव्यभागी सुरूपोदानतत्प
रः ॥ क्रूरःखलस्वभावश्च रज्जुयोगेजनोभवेत् ॥ ३१ ॥
केंद्रस्थानेषुसर्वेषु ग्रहैःसर्वैश्चसंस्थितैः ॥ मालायोगःसर्व
पापैः सर्पयोगःप्रकीर्तितः ॥ ३२ ॥ वस्त्रवाहार्थभोगाद्यै
र्युक्तःकांतासुहृत्प्रियः ॥ मालायोगेसमुत्पन्नः सुखीभव
तिसर्वदा ॥ ३३ ॥ क्रूरोनिःस्वोदुःखितश्च परान्नेनिरतः
सदा ॥ दीनश्चविषमोलोकः सर्पयोगेप्रजायते ॥ ३४ ॥
इतिनाभसयोगाः ॥ शाकंवह्नि ३ गुणंकृत्वा मुनिभि ७
र्भागमाहरेत् ॥ शेषंनेत्र २ गुणंकृत्वा पंचपंच ५ नियो
जयेत् ॥ ३५ ॥ लब्धंवह्नि ३ गुणंकृत्वा धान्यादेः सप्त
भागतः ॥ शून्येपंचैवविज्ञेयाः सर्वमेवनिरूपयेत् ॥३६॥
वर्षाधान्यंतृणंशीतमुष्णंवायुश्चवृद्धयः ॥ क्षयश्चविग्रह
श्चैव ज्ञेयमेवंक्रमेणच ॥ ३७ ॥ शाकंशक्र १४ गुणंकृत्वा
भागोवेदैर्विधीयते ॥ शेषेमघाभवंतीह चावर्ताद्यायथाक्र
मम् ॥ ३८ ॥ आवर्तेचिंतितावृष्टिःसमावर्तेसुशोभना ॥

पुष्करेदुष्करावृष्टिद्रोंणोवर्षतिसर्वदा ॥ ३९ ॥ दशभि र्दिवसैर्मासो मासचतुष्केणलभ्यतेदिवसः ॥ दिवसद्वयेनघ टिका घटिकायुग्मेनपलमेकंतु ॥ ४० ॥ ध्रुवांकः ॥ ध्रु वांकोदशधागुण्यो भानुना १२ त्रिंशतापिच ॥ षष्टिभिः ६० श्वहरेद्भागं दशाःसूर्यादितोभवेत् ॥ ४१ ॥ आदि त्यात्रिगुणोराहुःसूर्यचंद्रयुतोगुरुः ॥ आदित्यद्विगुणंभौमे मेलयित्वाशनिर्भवेत् ॥ ४२ ॥ चंद्रभौमौबुधो १७ ज्ञेयः केतुस्तुमंगलो ७ यथा ॥ चंद्रमाद्विगुणः २० शुक्रो दशाचक्रमुदाहृतम् ॥४३॥ नक्षत्रभुक्ताघटिकायुषष्ट्या वियन्नवाताःशरदोवशिष्टम् ॥ निहंतिसूर्येण १२ तथैवमा सं तथाखरामेण ३० दिनानिशेषात् ॥ ४४ ॥ तथैवष ष्ट्या ६० घटिकाःपलानिविशोधयेदायुषितत्रशेषम् ॥ आयुर्दशाभिश्चदशाहताचेदंतर्दशास्याद्दशभिश्च १० भागैः ॥ ४५ ॥ चंद्रकालानलंचक्रं व्योमाकारंलिखेद्बुधः॥ चतुर्दिक्षुत्रिशूलानि मध्यभिन्नानिकारयेत् ॥ ४६ ॥ पूर्वं त्रिशूलमध्यस्थं चंद्रभंचलिखेद्बुधः॥अन्यान्याभिजितासा

---

१ उक्तंचबृहत्पाराशर्य्याम् । दशादशाहताः कार्या दशभिर्भागमाहरेत् । लब्धांकाश्चभवेन्मासास्त्रिंशघ्नेच दिनानिचेति ।

धं नक्षत्राणिलिखेत्क्रमात् ॥ ४७ ॥ नामभंचास्थितंयत्र तत्रज्ञेयंशुभाशुभम्॥ त्रिशूलेषुभवेन्मृत्युर्मध्यमंबाहिरष्टके ॥ ४८ ॥ लाभंक्षेमंजयंप्रज्ञा चंद्रगर्भाष्टकेभवेत् ॥ शूले मध्येचगर्भेचफलंज्ञेयंद्विधाबुधैः ॥ ४९ ॥ लाभालाभौसु खंदुःखं जयंचैवपराजयम् ॥ चंद्रकालानलेचक्रे नित्यमेव विचारयेत् ॥५०॥ इतिदिनचंद्रकालानलचक्रं ॥ नवोर्ध्व गानिधिष्ण्यानि नवतिर्यग्गतानिच ॥ अधोगतानिधि ष्ण्यानि नवचैवलिखेद्बुधः ॥ ५१ ॥ चतुर्नाडीकृतेवेधे स व्यक्र्क्षत्रयंस्फुटम् ॥ सर्पाकारस्यचक्रस्य कालचक्रंप्रजा यते ॥५२॥ मुखमध्येत्रयंधिष्ण्यं स्थितंकालमुखंविदुः ॥ धिष्ण्यद्वयंचकोणस्थं कालदंष्ट्राद्वयंमतम् ॥ ५३ ॥ दिन र्क्षमादितःकृत्वा जन्मर्क्षंयत्रसंस्थितम्॥मुखदंष्ट्रागतेमृत्युः शुभमन्यत्रसंस्थिते ॥ ५४ ॥ ज्वरितेनष्टदष्टेच विवादेवि ग्रहेरणे ॥ मुखदंष्ट्रागतंनाम यस्यतस्यमहद्भयम् ॥५५॥ इतियमदंष्ट्राचक्रम् ॥ पूर्णोधनैःपरिजनैःसुतदारकोशैश्वं डप्रतापनिकरैर्विजितारिपक्षः ॥ कोपाकुलोनिजजनैः प रिपूर्णमानस्तुंगास्थिते दिनकरेभवतीहलोकः ॥ ५६ ॥ दाताभोक्ताप्रचुरयुवतीनायकोविश्वबंधुर्नानाक्रीडापरिण

तमतिश्चंचलात्मस्वभावः ॥ पुत्रैःपौत्रैर्हयगजरथैःपूर्णगे
होविलासीचंद्रेतुंगेभवतिमनुजोलोकमान्यःप्रसन्नः ॥५७॥
चंडप्रतापवशिताखिललोकपालः शस्त्रप्रहारनिपुणोधन
धान्यपूर्णः ॥ रक्ताधिकोरणधरासुपुरःप्रयातो तुंगस्थिते
क्षितिसुतेमनुजःप्रतापी ॥ ५८ ॥ अध्यापकःशुभमतिर्नृ
पतिप्रधानो लोकोत्तरातिविभवोगुणवानुदारः ॥ सत्की
र्तिमान्सुतनयोनिरुजः सुमित्रस्तुंगेबुधेभवतिसर्वजनोप
कारी ॥ ५९ ॥ भूमंडलीपतिरुदारमतिश्चदाता ब्रह्मात्म
बोधविमलोबहुपुत्रपौत्रः ॥ तीर्थानुरागहृदयोदृढदेहबंधु
स्तुंगेगुरौनरपतिर्धनवानुदारः ॥ ६० ॥ देशाधिपोदृढम
तिःसुतनुःसुमंत्री योद्धासमस्तजनपालनलब्धकीर्तिः ॥
चौरादिशासनपरःसुकविः सुबुद्धिस्तुंगेकवौकुलपतिर्मनु
जोतिहृष्टः ॥ ६१ ॥ आसागरंक्षितिपतिर्दृढदेहबंधो हिं
सारतोरणभुविप्रथितप्रभावः ॥ हस्त्यश्वरत्नमणिभिः
परिपूर्णगेहःसूर्यात्मजेभवतितुंगगतेमनुष्यः ॥ ६२ ॥
भवतिधरणिपालोनीचजातिःप्रतापी हयगजधनयुक्तोजा
तिवर्गैर्विरक्तः ॥ कुटिलमतिरनीतिर्भूरिभांडारयुक्तस्तम
सिमिथुनसंस्थेजायतेमानवेंद्रः ॥ ६३ ॥ इतिरव्यादीनां

परमोच्चगतफलम् ०॥दशांशे १०र्कः शशी त्र्यंशे भौमो ष्टाविंशके २८ तथा ॥ बुधः पंचदशांशे १५ च पंचमांशे ५ बृहस्पतिः॥६४॥सप्तविंशांशके २७ शुक्रो विंशत्यंशे २० शनैश्चरः॥ सैंहिकेयश्चविंशांशे २० परमोच्चंप्रकीर्तितम् ॥६५॥ इतिरव्यादिग्रहाणांपरमोच्चांशाः ॥इतिसर्वशास्त्रविशारदश्रीकाशीनाथकृतौजातकलग्नचंद्रिकासम्पूर्णा ॥ ॥ शुभम् ॥ श्रीगणेशायनमः ॥॥ अथजीवयोगः ॥ चंद्रात्सप्तमगोजीवोह्यथवाजीवसंयुतः ॥ जीवयोगंविजानीयाच्चिरायुर्धनवान्सुखी ॥ १ ॥ सिंहलग्नेयदाजन्मशुक्रश्चयादिपश्यति ॥ चक्षुर्हीनःसवक्तव्यः शंकरोयादिरक्षति ॥ २ ॥ सूर्यचंद्रौचयुगपद्द्वादशेयादिसंस्थितौ ॥ अंधप्रसूतंकुरुतः पापःषष्ठेथवामृतौ ॥ ३ ॥ त्रिषुत्रिषुचगेहेषु ॥ कन्याराशेःस्थितेरवौ ॥ पूर्वादिषुनकर्त्तव्यं द्वारंचैवयथाक्रमम् ॥ ४ ॥ अग्रतोहरतेचायुः पृष्ठतोहरतेधनम् ॥ वामदक्षिणतोवत्सः सर्वकार्येषुसिद्धिदः ॥ ५ ॥ उच्चस्थेवाचनीचस्थे सप्तमस्थेयदारवौ ॥ पानहीनोभवेद्बालो ह्यजाक्षीरेणवर्धते ॥ ६ ॥ तिथिःशरीरंदेवस्य तिथिनक्षत्रमाश्रितम् ॥तस्मात्तिथिंप्र

शंसंति नक्षत्रंनतिथिंविना ॥ ७ ॥ मीनांतेवृश्चिकांतेवै वृषेजूकेचमध्यगे ॥ यावत्तिष्ठेद्गुरौसौरिस्तावद्दुर्भिक्षमादिशेत् ॥ ८ ॥ अथचंद्रारिष्टशांतिः ॥ घृतकलशंसितवस्त्रयुगं सितवृषभंरजतंचसुवर्णम् ॥ संप्रदद्याच्चंद्रारिष्टे विप्रायारिष्टशमनाय ॥ ९ ॥ शुक्लाक्षतैः पूरयित्वा पात्रंवेणुमयंनवम् ॥ तस्योपरिपयःपूर्णंरूप्यगर्भंचकांस्यजम् ॥ १० ॥ शुक्लपुष्पैश्चगंधैश्च शुभ्रवस्त्रसमायुतम् ॥ दद्याज्ज्योतिर्विदे तच्च चंद्रारिष्टप्रशांतये ॥ ११ ॥ गदितादक्षिणाचात्र मौक्तिकंशंखसंयुतम् ॥ घृतदीपंचतुर्वर्त्ति चंद्रमुद्दिश्यदापयेत् ॥ १२ ॥ मधोःसितादौप्रतिपद्दिनाधैं वारस्तुराजाकरणाधिपोजे ॥ सस्याधिपःकर्किणिरौद्राधिष्ण्ये मेघाधिनाथोरसपस्तुलाभे ॥ १३ ॥ धान्याधिपोधन्विनिनक्रराशौ स्याद्धातुरत्नादिंतरेतरःस्यात् ॥ १४ ॥ अथस्त्रीजातकम् ॥ वैधव्यंनिधनेचिंत्यं शरीरंजन्मलग्नभाक् ॥ सप्तमेपतिसौभाग्यं पंचमेप्रसवस्तथा ॥ १५ ॥ लग्नेंद्वाःसमभेजाता स्वोचिताचारशीलभाक् ॥ ओजभेपुरुषाकारा दुःशीलादुःखितावधूः ॥ १६ ॥ कन्यालग्नेयुतेदृष्टे शुभैः सच्छीलभूषणा ॥ दुःशीलानिर्गुणापापैर्लग्नेन्द्वोर्युतदृ

ष्टयोः॥१७॥ कन्यालिवृषसिंहेषु शशांकेऽल्पसुतावधूः॥ मूर्तौराह्वर्कभौमेषु रंडाभवतिकामिनी ॥ १८ ॥ वैधव्यं चाष्टमेक्रूरे शुभदृष्टिविवर्जिते ॥ यस्यांशेनिधनाधीश स्तद्दशायांविनिर्दिशेत् ॥ १९ ॥ प्रवासीचरभेद्यूने स्वगृहस्थःस्थिरेपतिः ॥ द्व्यंगेस्थिरःप्रवासीच क्लीबोस्तेबुध मंदयोः ॥ २० ॥ शुभैरदृष्टेविमले द्यूनभेग्रहवर्जिते ॥ जातायाइहकन्यायाः भवेत्कापुरुषःपतिः ॥ २१ ॥ द्यूने शुक्रेगृहेशेवा सुरूपःसुभगःपतिः ॥ बोधने निपुणोविद्वां श्चंद्रेकामातुरोमृदुः ॥ २२ ॥ इनेतिकर्मकृत्तीक्ष्णो गुणी जीवेजितेंद्रियः ॥ स्त्रीलोलःकर्मकृत्कौजेमांदेमूर्खोजरन्नपि ॥ २३ ॥ भद्रातिथिर्यदाश्लेषा कृत्तिकाशततारका ॥ रविमंदारवाराश्चेद्विषकन्याबुधैःस्मृता ॥ २४ ॥ तन्वादिभावजंवान्यद्ग्रहोत्थंचिंतयेत्पृथक् ॥ केचिन्मतेस्त्रीनरयोस्तुल्यंजन्मफलंवदेत् ॥ २५ ॥ अथस्फुटश्लोकाः ॥ दशमस्थोयदाराहुर्जन्मकालेस्थितोभवेत् ॥ षोडशाब्दे भवेन्मृत्युर्जातकस्यनसंशयः ॥ १ ॥ लग्नेभृगुःकेंद्रगत श्चजीवश्छिद्रे ८ नपापाः परमायु १२० रत्र ॥ शुद्धेष्टमे

कर्कटलग्नसंस्थौ शशांकजीवौगुरुभार्गवौवा ॥ २ ॥ जायास्थानेक्षपानाथःसुतस्थानेबृहस्पतिः ॥ कर्मभावेभवेच्छुक्रोराजयोगोभिधीयते ॥ ३ ॥ त्रयोग्रहायदैकत्र लग्नराशिविवर्जिते ॥ कृत्वापुण्यसहस्राणिम्रियतेजाह्नवीजले ॥ ४ ॥ जन्मपत्रफलंश्रुत्वा दैवज्ञंपूजयेन्नृपः ॥ क्षेत्राश्वस्वद्रव्यान्नैस्त्रिवर्गफलसिद्धये ॥ ५ ॥ ३० ॥ इतिलग्नचंद्रिकायांसंगृहीताग्रन्थान्तरश्लोकाः ॥ समाप्तश्चायंग्रन्थः॥

इदं पुस्तकं श्रीकृष्णदासात्मजेन खेमराजश्रेष्ठिना मोहमय्यां श्रीवेंकटेश्वराख्यस्वपुस्तकमुद्रणागारे मुद्रितम् । शकाब्दाः १८१७, संवत् १९५२ ॥

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास

"श्रीवेंकटेश्वर" छापाखाना-मुम्बई.

# जाहिरात।

# श्रीमद्भागवत संस्कृत तथा भाषा-टीका सहित।

श्रीवेदव्यासप्रणीत श्रीमद्भागवत सबसे कठिनहै और इस-
काप्रचार भरतखण्डमें सबसे अधिक है यह ग्रंथ क्लिष्टताके कारण
सर्व साधारण लोगोंको टीका होनेपर भी अच्छी रीतिसे सम-
झना कठिन था कोई २ स्थलोंमें बडे २ पण्डितोंकी भी बुद्धि
चक्करमें पडजाती थी,इसलिये विना संस्कृत पढ़े सर्व साधारण
पण्डित व स्वल्प विद्याजाननेवाले भगवद्भक्तोंके लाभार्थ संस्कृ-
तमूल व अतिप्रिय व्रजभाषा टीकासहित जोकि हिन्दि भाषा-
ओंमें शिरोमणि और माननीयहै उसी भाषामें टीका बनवाकर
प्रथमावृत्ती छपायाथा वह बहुतही जल्दी हाथोंहाथ विकगई,
फिर द्वितीयावृत्ति भी विकगई अब इस्की तृतीयावृत्ति द्विती-
यावृत्तिकी अपेक्षा अच्छी तरह शुद्ध करवाके मोटे अक्षरमें
छपायाहै और भक्ति ज्ञानमार्गी ५०० अतीव मनोहर दृष्टांत
दिये हैं. कागज विलायती बढिया लगायाहै, माहात्म्य षष्ठा-
ध्यायी भाषाटीका सहित इस्के साथहीहै,प्रथमावृत्तिमें मूल्य१५
रुपया था इस आवृत्तिमें केवल१२बाराही रुपया रक्खा है.

पद्मपुराण समग्र सातो खंड ५५००० ग्रंथ छपातयार है
मूल्य केवल १८ रु०

पुस्तक मिलनेका ठिकाना-खेमराज श्रीकृष्णदास.

"श्रीवेंकटेश्वर" छापखाना-मुंबई.

# जाहिरात ।

